**वि जाइअ** इति। वि शब्दोऽत्र प्राकृतवा[क्या]लंकारे। **जाइअ** इति जातः। उक्तलक्षणो हंकारः।। 4।।

ननु अवधूती चेन्मूलनालीकृता षण्डमृणालपत्राणि कानीत्याह—

**ललणा रसणा [1]वेति श( ष )ण्ड ठिअ च वि पासे ।**
**[2]पत्त-चउक्कम चउ-मुणाल ठिअ[3] महासुह वासे ।। 5।।**

ललनाशब्देनालिः प्रज्ञा चन्द्रो विधीयते। तस्य वामनासापुटस्वभावस्तेन प्राणवायु-प्रवाहिणी ललना स्थिता। रसनाशब्देन कालिरूपोपायः सूर्योऽभिधीयते। तस्य दक्षिण-नासापुटस्वभावेन प्राणवायुप्रवाहिणी रसना स्थिता। सृष्टिक्रमेण विज्ञान-संस्कार-संज्ञा-वेदना-रूपस्वरूपाणि पञ्चमण्डलानि ललनायाः। संहारक्रमेण पृथ्व्यप्तेजोवाय्वाकाश-स्वभावानि रसनायाः। एवं द्वादशलग्नपरिवर्तनविषमसमप्रवाहे तु त्रिंशन्मण्डलभोगिनी ललनारसना। **ललना-रसना वेति षण्ड ठिअ** इति। अत एव द्वे षण्डे स्थिते।

**ललना प्रज्ञास्वभावेन रसनोपायसंस्थिता ।**
**अवधूती मध्यदेशे तु ग्राह्यग्राहकवर्जिता** ।। इति।।

यत्तदुक्तमवेति। चतुःशून्यरूपं पत्रचतुष्कम्। **चउ मुणाले**ति। चतुर्नाडीस्वभावं चतुर्मृणालस्थितम्। कुत्रेत्याह—**महासुखावासे** चतुरानन्दरूपं चतुःशून्यात्मकं महासुखा-वासम्। वसत्यस्मिन्निति महासुखावासम् ऊष्णीषकमलम्, तत्र सर्वशून्यालयम्। डाक-डाकिनीजालमेलापकम्, जालन्धराभिधानमेरुगिरिशिखर इत्यर्थः ।। 5।।

**एवंकार [4]बीअ लइअ [5]कुसुमिअ-अरविन्दए ।**
**महुअर-रूअ[6] सुरअ-वीर जिंघइ[7] मअरन्दए ।। 6।।**

---

1. रविससि तुड़िअ वेण्ण : ख.ग.घ., तुडिआ विण्णि - ङ ।
2. पत्तोचउट्ठ - ग.घ., चउट्ठउ - ङ ।
3. ठिअउ - ङ ।
4. वीउ - ङ ।
5. कुसुमिअउ अरविंदउ - ङ ।
6. अरु एअउ - ङ ।
7. जिग्घइ मअरंदउ - ङ ।

**एवंकार वीअ लइअ** इत्यादि। एवमिति उक्तलक्षणमेवंकारबीजं गृहीत्वा तद्बीजं गर्भभूत्वा **कुसुमितमनाहतारविन्दमि**ति। अयमर्थः। येन बीजेन यद्वृक्षादिकं निष्पद्यते तस्य वृक्षस्य कुसुममपि ततः सद्बीजगर्भमेवेति। अत्रान्यैवंकारनिष्पन्नस्य पद्मस्य एवंकारगर्भमेव कुसुममिति। **महुअर रूअ** इत्यादि। मधुकरश्चित्तवज्रस्तस्य रूपं स्वरूपं जिघ्रति तेन। **सुरअ वीर** इति। प्रज्ञोपाययोर्द्वन्द्वयोगः सुरतम्। तत्र विच्छिन्नमहारागरूपेण विरागदलनाद्वीरः। स एव भगवान्ना(नना)हतः **जिंघइ** इति जिघ्रति। **मकरन्दं** पुष्परसम्। सुरतवीरतयाऽच्युतमहाराग-सुखमनुभवतीत्यर्थः। एतादृशो भगवानेवंकाररूपः ।।6।।

कथं सास्रवपञ्चमहाभूतात्मको जातः? इत्याशङ्क्याह—

**पञ्च महाभूआ वीअ लइअ सामग्गीए जइअ[1] ।**
**कठिण पूहवि अव[2] तेअ गंधवह गअण सञ्जइअ[3] ।।7।।**

**पञ्च महाभूआ वीअ लइअ** इत्यादि। महाभूतं पृथिव्यादिपञ्चकम्। बीजमेवंकारं गृहीत्वा **सामग्र्या** बोलकक्कोलयोगेन **जातमु**त्पन्नम्। तदेव दर्शयन्नाह—**कठिन पूहवि** इत्यादि—पृथ्वीधातोः कक्खटत्वात्कठिना पृथ्वी। द्रवत्वाद[प्]धातुः। उष्णत्वात्तेजोधातुः। गमनत्वाद्वायुधातुः। सुखरूपत्वादाकाशधातुः ।।7।।

**गअण-समीरण-सुहवासे[4] पञ्चेहिं परिपूण्णए ।**
**सअल सुरासुर एहु उअत्ति बढ़ [5]एहु सो सुण्णए ।।8।।**

**पञ्चेहिं परिपूण्णए** इति। एतत्पञ्चभूतकैः परिपूर्णं मिलितं बोधिचित्तमित्यर्थः। तथा च **श्रीहेवज्रे**—

**कस्माद् भौतिकस्कन्धः? भगवानाह—बोलकक्कोलयोगेन।**

**स्पर्शात्काठिन्यधर्मेण पृथिवी तत्र जायते ।**
**बोधिचित्तद्रवाकारादब्धातोश्च संभवः ।।**

---

1. जइआ - ङ. ।
2. जल - ङ. ।
3. संजाआ - ङ. ।
4. सुह-समाहि - ङ. ।
5. एत्थु - ङ. ।

**तेजो जायते घर्षणाद् गमनाद्वायुः प्रकीर्तितः ।**
**सौख्यमाकाशधातुश्च पञ्चभिः परिवेष्टितः** ।। इति।

(हे० त० 1.10.38-40)

अत एवाह—**पञ्चेहिं परिपूण्णए** इति। एभिः पञ्चभिः परिपूर्णं मिलितम्। **सअल सुरासुर एहु उअत्ती**त्यादि। सकलमनुष्यामनुष्याणां सुरासुराणामुत्पत्तिकारणम्। एहु इति एतत्। अयमर्थः—

**पृथिव्यादीनि चत्वारि तत्त्वानि शून्यचतुष्टयम् ।**
**अष्टौ पदार्था विज्ञेया विनाशोत्पत्तिहेतवः** ।। इति।

**प्रभास्वरान्महाशून्यं तस्माच्चोपायसंभवः ।**
**तस्मादुत्पद्यते प्रज्ञा तस्याः पवनसंभवः ।।**

**पवनादग्निसंभूतिरग्नेश्च जलसंभवः ।**
**जलाज्जायते पृथ्वी सत्त्वानामेष संभवः ।।**

**भूधातुर्लीयते तोये तोयस्तेजसि लीयते ।**
**तेजश्च सूक्ष्मधातौ च वायुश्चित्ते विलीयते ।।**

**चित्तश्चैतसिके लीयेदविद्यायां तु चैतसम् ।**
**सापि प्रभास्वरं गच्छेन्निरोधोऽयं भवत्रये** ।। इति।

एतदेवाह—**वढ एहु सो सुण्ण ए** इत्यादि। एतद्यानबहिर्भूतत्वात्। वढ इत्यक्षरः संबोधनम्। हे मूढ मन्त्रनयतत्त्वाविद! एतदेव शून्यमिति। सर्वशून्यं प्रभास्वरम्, अतो नान्यच्छून्यं तत्त्वमस्तीत्यर्थः। एवं तेनैव तदुक्तम्—अयमेव भवनिर्वाणैकरूपमहासुखवज्रो भगवान् स्वयमेव शरीरसरसिजमभिनिर्माय तदानाहतकुसुमरसं चित्तमधुकररूपेणा-विच्छिन्नमपहरणे व्यवस्थित इति। तथा च **श्रीहेवज्रे**—

**स्वयं कर्त्ता स्वयं हर्ता, स्वयं राजा, स्वयं प्रभुः**। (हे० त० 1.8.47)

इत्येवंरूपं साध्यं निश्चित्याधुना साधनं विचिन्त्य तेन तावद्विषयोपभोगपरिहाणे विषये वासक्तेर्नास्यसाधनं श्रावकपारमितानययोरेव व्यवस्थितत्वात्। निर्व्याजसमस्तविषयासंगेनैव महारागाद्यभिसंबोधेर्दर्शित्वात्। विषयसुखलक्ष्मीरेवास्य साधनम्। तथा च **सरहपादाः**—

केचिद्विषयांस्त्यक्त्वा केचिद्विषयान्वाधिष्ठानं कृत्वा केचिद्विषयैरेव तु नरवृषभाः कुर्वते बोधिम्। **भगवानाह—**

**येन तु येन तु बध्यते लोकस्तेन तु तेन तु बन्धनं मुञ्चेत् ।**
**लोको मुह्यति वेत्ति न तत्त्वं तत्त्वविवर्जितः सिद्धिं न लप्स्येत् ।।**

(हे० त० 1.9.19)

**रागेण बध्यते लोको रागेणैव विमुच्यते ।**
**विपरीतभावना ह्येषा न ज्ञाता बुद्धतीर्थिकैः** ।। (हे० त० 2.2.51)

यद्येवं सर्वप्राणिनो विषयासक्तास्तेऽपि तर्हि महारागाभिसंबोधिं लप्स्यन्ताम्। नैव हि विषयोपभोगमात्रेणैवाविच्छिन्नमहारागसुखं लभ्यत इतिक्रमः। किं तु तेनैव सोपायेन, निरुपायेन विषयाक्षररूपं बिनाऽऽभासत्रयस्यापरिज्ञानात् न महारागसुखस्य साक्षात्कारः। तथा च **ज्ञानवज्रसमुच्चयमहायोगतन्त्रे—**

''यो भगलिङ्ग एवासक्तस्तत्परायणः स न महारागसम्बोधिं लभते। यदा तु केवलं सौख्यमादायाधिमुक्तिमात्रेणादिकर्मिकभूमौ व्यवतिष्ठते पुनः शैक्षो भवति। यस्तु वज्रपद्म-समायोगसुखेन प्रकृत्याभासं सम्यग्गुणं लक्षणं जानाति स महारागसुखप्रविष्टो भवति।''

तथा च **श्रीहेवज्रे—**

**येन येन हि बध्यन्ते जन्तवो रौद्रकर्मणा ।**
**सोपायेन तु तेनैव मुच्यन्ते भवबन्धनात्** ।। (हे० त० 2.2.50)

ननु सोपायमपि विषयसुखं निमित्तमेव, महासुखञ्च निर्निमित्तम्, तत्कथं तथा भवितुमर्हति? सनिमित्तसुखमेव सद्गुरूपदेशान्निर्निमित्तं भवति। तथा चाहुः **सरहपादाः—**

**यदिदं संनिमित्तसुखं तदेव महतां निमित्तपरिहीणम् ।**
**ज्ञानस्वयम्भूरूपं महासुखं कल्पनाशून्यम् ।।**

(चर्यागीतिकोष, पृ० 110)

तस्मात् सोपायविषयोपभोग एव महारागाभिसंबोधिसाधनमिति ।। 8।।

तदेवाह—

**खिति जल जलण पवण गअण वि माणह[1] ।**
**मण्डलचक्क विसअबुद्धि [2]लइअ परिमाणह ।।9।।**

**खिति ज़ल जलणे**त्यादि। खिति पार्थिवमण्डलं जलं जलमण्डलं जलणमग्निमण्डलं पवनं वायुमण्डलम्। गअणमाकाशमण्डलम्। एतानेव पञ्चसृष्टिसंहारक्रमेण चन्द्रसूर्यभेदेन रोच्यते। तथा च **श्रीआदिबुद्धे**—

**आकाशाद्यं सदा वामे संहारः क्ष्मादि दक्षिणे** । (सेकोद्देश-62)

**श्रीसमाजोत्तरेऽपि**—

**पञ्चज्ञानमयं श्वासं पञ्चभूतस्वभावकम् ।**
**निश्चार्य पद्मनासाग्रे पिण्डरूपेण कल्पयेत् ।।**

**पञ्चवर्णं महारत्नं प्राणायाममितिस्मृतम् ।**
**स्वमन्त्रहृदये ध्यात्वा प्राणं बिन्दुगतं न्यसेत् ।। इति ।।**

(गु० स० 18.146-148)

अस्यापि प्रतिनिर्देशमाह—**वज्रज्वालनाग्निमहायोगतन्त्रे**—

**नासाग्रे सर्षपं नाम प्राणायामस्य कल्पनात् ।**
**प्राणायामे स्थिताः पञ्चरश्मयो बुद्धभावतः ।।**

(गुह्यसमाजप्रदीपोद्योतनटीका, पृ० 57)

तथा च **वज्रगर्भपादाः**—

"नासाद्वयरन्ध्रे वामदक्षिण आदौ वा यदा आकाशमण्डलं वहति तदा मध्ये वहति। यदा वायुमण्डलं वहति तदा नासावामपुटे स्पृशति। यदा तेजोमण्डलं तदा नासारन्ध्रं दक्षिणं स्पृशति। यदा तोयमण्डलं तदा ऊर्ध्वम्। यदा पृथ्वीमण्डलं वहति तदाधः स्पृशति। एतत् मण्डलचक्रम्।" **विसअ बुद्धि लइअ** इति। विषयो वज्राब्जयोगः। तस्मिन्सति या **बुद्धिः**

1. माणहो - ङ ।
2. लइआ परिमाणहो - ङ ।

सुखवित्तिः ज्ञानमुद्रा सा विषयबुद्धिः सुखः। सत्त्वाः **प्रतिपद्यन्ते**। तन्मण्डलचक्रम्। **परिमाणतः** सर्वतोभावेन यथा षष्ठज्ञानप्रतिष्ठकं भवति तदा जानीत प्रतिपदाद्वा।। ९।।

एतेन कीदृशं भवतीत्याह—

**णित्तरङ्ग[1] सम सहज रूअ सअल-कलूस-विरहिए[2] ।**
**पाप-पुण्ण-रहि एक्कु[3] णत्थि काण्हु[4] फुड़े कहिए ।। 10।।**

**णित्तरङ्ग सम सहज-रूअ** इति। आवाहनविसर्जनाभावान्निस्तरङ्गम्। कुम्भक-रूपस्यातिक्रान्तत्वात् समम्। यथाभूतैवङ्काररूपत्वात् सहजरूपम्। **सअल कलूस विरहिअ** इति। सकलकलुषैः सकलपापैर्विरागरूपैर्विरहितं मुक्तम्। तथा च **श्रीआदिबुद्धे—**

**न विरागात् परं पापं न पुण्यं सुखतः परम् ।**
**अतोऽक्षरसुखे चित्तं वेशनीयं सदा नृप** ।। इति।। (सेकोद्देश-135)

एवंभूते महासुखे सुखाभिमानो नास्तीत्याह—**पापपुण्णरहि एक्कु णत्थी**ति। पापं वैरागसुखम्। पुण्यमक्षरसुखम्। तत्रैकमपि नास्ति। तथा च **श्रीसंपुटे—**

**रागश्चैव विरागश्च वर्जयित्वा पुण्य( घुणः )स्थितः** । इति।

**काण्हु फुड़े कहिए** इति। स्फुटमेतच्च कृष्णेन च वज्रेण कथितम्। अन्यैः कथितं न स्फुटमित्यर्थः ।। 10।।

एतज्ज्ञानबहिर्मुखैरात्मयोगेनापि न ज्ञातव्यमिति दर्शयन्नाह—

**[5]वहि णिक्कलिदे[6] कलिदे सुण्णासुण्ण पइट्ठ[7] ।**
**सुण्णासुण्ण वेण्णि मज्झें रे बढ़ किम्पि ण दिट्ठ[8] ।। 11।।**

---

1. त्तरंगु समु - ङ. ।
2. विरहिंउ - ङ. ।
3. ए कुच्छ णाहि - ग. घ. ङ. ।
4. कण्हें फुडु कहियउं - ङ, फड़ - घ. ।
5. बहिरहिं - ङ. ।
6. लिअ कलिअ - ङ., लिआ कलिआ - ग. घ. ।
7. पइट्ठउ - ङ. ।
8. दिट्ठउं - ङ. ।

**वहि णिक्कलिदे** इत्यादि। बहिराकारा(र)चक्रं स्वधिया निष्क्रम्य कलिते शून्यत्वेनाकारं चक्रमागम्य, अशून्यञ्च स्वशरीरे कल्पितयोगादिकधिया प्रविश्य तदालम्बनो भूत्वा। **सुण्णासुण्ण वेण्णि मज्झें** इति। अनयोः शून्याशून्ययोर्मध्ये हे मूढ किमपि तत्त्वं न दृष्टं न ज्ञातमित्यर्थः ।। 11।।

एवञ्चेन्नास्त्येव तत्र किञ्चित्तत्त्वमित्याशङ्क्याह—

**सहज[1] एक्कु परु अत्थि तहिं फुड़[2] काण्हु परिजाणइ ।**
**सत्थागम वहु पढ़इ सुणइ[3] वढ़ किम्पि ण जाणइ ।। 12।।**

**सहज एक्कु परु अत्थि तहिं** इत्यादि। सहजमेव एवं परमस्ति। तच्च कृष्णवज्रः परं जानाति। **सत्थागम** इति। शास्त्राणि तर्कादीनि आगमाः क्रियाचर्यादयः। तान् बहुविधान् पठति शृणोति चिन्तयति अभ्यस्यति च किमपि न जानाति। तेषां तद्रूपाभावात्। निस्तरङ्गमन्त्रनयोपदेशवेत्ता मत्सदृशः परं जानातीत्यर्थः ।। 12।।

तमेवोपदेशं तथा तथा पदैर्व्यादिशन्नाह—

**[4]अह ण गमइ ऊइ ण जाइ।**
**वेण्णि-रहिअ[5] तसु णिच्चल ठाइ ।**
**भणइ [6]कण्हु मण कहवि ण फुट्टइ।**
**णिच्चल[7] पवण घरिणि घरे वट्टइ ।। 13।।**

**अह ण गम** इत्यादि। ऊर्ध्वञ्च यातीत्यनया वृत्त्या प्राणवायोः कायवाक्चित्तभेदेन चन्द्रार्कराहुतोयाग्निशून्यस्वजातिमार्गत्रयस्य निरोधः। एवमूर्ध्वाधः प्राणापानयोर्मार्गनिरोधात्। अधो गच्छतीत्यनया संवृत्या अपानवायोः कायवाक्चित्तभेदेन विण्मूत्रशुक्रावाहिभूवायुज्ञान-धातुस्वजातिमार्गत्रयस्य निरोधः।

1. सहजु एकु – ङ. ।
2. फुडु कण्हु – ङ. ।
3. पुणु – ङ. ।
4. अहो ण – ङ. ।
5. रहिउ सो – ङ. ।
6. कण्ह – ग. घ., मणु – ङ. ।
7. णिच्चलु – ङ. ।

पूर्वोपसूचितज्ञानबिम्बदर्शने सति ततो अधोवज्रजापविधिना प्राणायामो निरन्तर-मापद्यते। तथा च **श्रीआदिबुद्धे**—

**दृष्टे बिम्बे ततः कुर्यात् प्राणायामं निरन्तरम् ।**
**ऊर्ध्वाधस्त्रिषु नाडीषु कायवाक्चित्तरोधनात् ।।**

**चन्द्रार्कराहुविण्मूत्रशुक्रमार्गप्रवाहिषु ।**
**तोयाग्निशून्यभूवायुज्ञानधातुस्वजातिषु ।।**

**चन्द्रसूर्यतमिन्यो या कायवाक्चित्तनाडिकाः ।**
**विण्मूत्रशुक्रवाहिन्यः प्राणेऽपाने क्रमेण ताः ।।**

**चन्द्रकाय उपायस्य प्रज्ञाया वाग्दिवाकरः ।**
**प्रज्ञाकायस्तु विण्नाडी प्रभोगे मूत्रवाहिनी ।।**

**तमिनी चित्तमुपायस्य प्रज्ञाया( : ) शुक्रवाहिनी ।**
**ऊर्ध्वाधश्चित्तनाड्यौ द्वे तमिनीशुक्रवाहिन्यौ ।।**

**ऊर्ध्वाधः षट्कुलं ह्येतत् कायवाक्चित्तहेतवः ।**
**प्रज्ञोपायाङ्गभेदेन संस्थितं सर्वदेहिनाम् ।।** इति।।

(सेकोद्देश ३५–४०)

एवं सति प्राणायामः कथं तिष्ठतीत्याह—**वेण्णि रहिअ तसु णिच्चल ठाइ** इत्यादि। द्वाभ्यां ऊर्ध्वाधः प्राणायामाभ्यां रहितं परिमुक्तं सत्तथारूपं निश्चलं तिष्ठति मध्यमोत्तमश्वास इति। तथा च **कुलिकायाम्**—

**हेरुकः सहजानन्दो मध्यमश्वास उत्तमः ।**
**विण्मूत्रशुक्रमार्तण्डचतुर्नाडीसमन्वितम् ।।**

उक्तञ्च **व्यक्तभावानुगततत्त्वसिद्धौ**—

**स्वस्थानस्थः सहजपवनः कल्पनाजालमुक्तः**
**स्वान्तस्तोषं किमपि जनयत्येष शून्यस्वभावः ।**

(व्यक्तभावानुगततत्त्वसिद्धि 6, पृ० 174)

एवं सति बोधिचित्तमहाऽच्युतं संप्रतिदर्शयन्नाह— **भणइ कण्हु मण कहवि ण फुट्टइ** इत्यादि। भणति कृष्णाचार्यः। मनोबोधिचित्तं कथमपि न फुट्टति न स्खलति। उभयगतिभंगेन कवलीकृतकालनाडीरूपत्वात्। अयमभिप्रायः न पततु शशधर बिन्दुर्नामा किमेवमिह साध्यमस्माकं किन्त्वनुभयगतिकरूपम् एतदन्तरमहासुखरूपं बोधिचित्तं कुत्र वर्तेत। इह **णिच्चल पवण धरणि घरे वट्टइ** इत्यादि। निश्चलपवनो मध्यमश्वासः स एव ज्ञानमुद्रारूपत्वात् गृहिणी तस्या गृहं सुखम् आकाशधातुरवधूती तत्र वसते निवसतीति। अयमभिप्रायः। वायुरिह गतिधर्माऽकाशधात्वाश्रयः। गत्यागतिविनिर्मुक्तमाकाशधातोर्नीयमानम्। अध्यारोहणेनालोकप्रतिबिम्बसहितेन विज्ञानत्रयेण सहजे लीयते। तेन तदात्मको भगवान् महासुखवज्रः तत्र निवसतीत्युच्यते। तथा च **अनुत्तरसन्धौ**—

**आलोकालोकाभासौ च तथालोकोपलब्धिकम् ।**
**चित्तं त्रिविधमित्युक्तम् आधारस्तस्य कथ्यते ।।**

**वायुना सूक्ष्मरूपेण ज्ञानं संमिश्रतां गतम् ।**
**निःसृत्येन्द्रियमार्गेभ्यो विषयानवलम्बते ।।**

**आभासेन यदा युक्तो वायुर्वाहनतां गतः ।**
**तदा तत्प्रकृतीः सर्वा अस्तव्यस्ताः प्रवर्तते ।।**

**यत्र यत्र स्थितो वायुस्तां तां प्रकृतिमुद्वहेत् ।**
**यावत् समीरणोच्छ्वासो नाभासो निश्चलो भवेत् ।। 13 ।।**

(पञ्चक्रम, अनुत्तरसन्धि 31-34, पृ० 46-47)

तदेव कथं सर्वजनसाधारणं भवतीत्याह—

**वरगिरिकन्दरे गुहिर जगु तहि सअल[1] वितुट्टइ ।**
**विमल[2] सलिल तहि सोस जाइ जइ कालाग्नि पइट्टइ ।। 14 ।।**

**वरगिरि कन्दर** इत्यादि। वरः श्रेष्ठो गिरिः कन्दरदण्डरूपात्मकः। तथा च **श्रीसंपुटे**—

**स्थितः पादतले वायुर्भैरम्भो धनुराकृतिः ।**
**स्थितस्त्रिकटिदेशे तु त्रिकोणे ज्वलनस्तथा ।।**

---

1. सअलु वि चिट्टइ - ङ. ।
2. विमल सलिलु सोसिज्जइ कालाग्गिइ - ङ. ।

**वर्तुलाकाररूपो हि वरुणस्तूदरे स्थितः ।**
**हृदये पृथिवी चैव चतुरस्रा समन्ततः ।।**
**कंकालदण्डरूपो हि सुमेरुगिरिराट् तथा** ।। इति ।।

(सम्पुटतन्त्रे षष्ठस्य तृतीयप्रकरणे)

तस्य कन्दरं कुहरम्। तदेव कायवाक्चित्तमनसामगोचरं तत्किं भवति। **जगु सअल वितुट्टइ** इत्यादि। जगत्सकल एव तत्र त्रुट्यति 'त्रस्यति' तदूर्ध्वं तच्छिखरपर्यन्तन्नातिसर्पति। द्वीन्द्रियकुन्दुरुसुखाभिमानेनास्थिरचित्तत्वादिति। ननु जगदस्यां त्रुट्यतीत्येतदङ्केन ज्ञायते। आह—**विमल सलिल तहि सोस जाइ जइ** इति। विमलविवृत्या सुखरूपेण सलिलं संवृत्या सुखद्रवाकारेण विमलग्रहसत्यज्ञानं बोधिचित्तं यच्छोषं यात्यधः पतति। बोधिचित्तं हि जगदात्मभूतं तस्मिन्नधः पतिते जगत्सर्वं त्रुट्यति म्रियते। तथा च **आदिबुद्धे**—

**अधश्चन्द्रामृतं याति मरणे सर्वदेहिनाम् ।**
**ऊर्ध्वे सूर्यरजो राहुर्विज्ञानं भावलक्षणे** ।। इति ।। (सेकोद्देश 86)

तत्र किं स्यादित्याह—**कालाग्नि पअ( इ )ट्टइ** इति। कालोऽग्निश्च्युतावस्था कृष्ण-प्रतिपत्प्रवेशलक्षणम्। मरणकाल इति। तथा च **श्रीआदिबुद्धे**—

**च्युतिर्विरागसंभूतिर्विरागाद्दुःखसंभवः ।**
**दुःखाद्धातुक्षयः पुंसां क्षयान् मृत्युःप्रजायते ।।**

**मरणात्पुनर्भवस्तेषां जरामृत्युश्च्युतिः पुनः ।**
**एवं विरागसंभूतिः सत्त्वानां नान्यथा भवः ।।**

**तस्मात्सर्वप्रयत्नेन च्युतिरागं विवर्जिताः ।**
**येनाक्षरं सुखं याति योगी संसारबन्धनात् ।। 14 ।।**

(सेकोद्देश 139-141)

कथमेतदच्युतं न भवतीत्याह—

**एहु सो [1]दुद्धरमेरु धरणिधर [2]समविसम उत्तार ण पावइ ।**
**भणइ [3]कण्ह दुल्लक्ख दुरवगाह को मणे परिभावइ ।। 15 ।।**

---

1. सुदुउद्धरु - ङ ।
2. समुविसमु उत्तारु - ङ ।
3. कण्हु - ङ, काण्ह - ग. घ. ।

**एहु सो दुद्धरमेरु धरणिधर** इत्यादि। दुःखेन षडङ्गयोगैः प्राणबन्धेन बोधिचित्तं ध्रियतेऽस्मिन्निति दुर्द्धरम्। धरणिधरः स एव मेरुवत्। तत्र समलग्नक्रमेण वहतीति समः सूर्यवाही दक्षिणमार्गः। विषमलग्नक्रमेण वहतीति विषमः चन्द्रवाही विषममार्गः। समविषमाभ्यामुभयमार्गयुक्तेन मनसा विज्ञानधातूनां परिणाम इति व्यवलोकयति। एवं न जानात्येवेत्यर्थः। एवंभूतमना तच्चेतं न जानाति। चन्द्रसूर्याभ्यां वहतीति समविषमसत्त्वानां विज्ञानधातुः। उत्तारं तद्दुर्लंघनं तच्छिखरं न प्राप्नोति। अतएव **भणइ कण्ह** इत्यादि। भणति कृष्णवज्रः। दुःखेन विरागदशावञ्चनेन ज्ञानचक्षुषा लक्षत इति दुर्ल्लक्षः सर्वशून्यत्वात्। सर्वाकारसमत्वात्। दुःखेनावगाहते अनुभूयत इति दुरवगाहः । तमेव तादृशं को मनसा परिभावयति ।। 15।।

कः पुनस्तं जानातीत्याह—

**जो ( यो ) संवेअइ मण[1] रअण अहरह सहज[2] फरन्त ।**
**सो परु जाणइ धम्म-गइ अण्ण कि मुणइ कहन्त[3] ।। 16।।**

**यो संवेअ** इत्यादि। यः सम्यक् कुलिशाब्जसंयोगेन मनोऽवलम्बनेन यथार्थं वेदयति। यथाभूतमननान्मनः, रतिमनुत्तरसुखं तनोतीति **रत्नं** मनोरत्नं बुद्धबिम्बम्। तथा च **श्रीसमाजे**—

**भगे लिङ्गं प्रतिष्ठाप्य बोधिचित्तं न चोत्सृजेत् ।**
**भावयेद्बुद्धबिम्बं तु त्रैधातुकमशेषतः** ।। इति।।

(सेकोद्देश 146)

तथा च **श्रीआदिबुद्धे**—

**बिम्बं शून्योद्भवं हेतुः फलमक्षरजं सुखम्** । इति।

(सेकोद्देश 146)

अत एवाह—**अहरह सहज फरन्त** इति। अहरहः प्रतिसंजातसर्वशून्यात् परिस्फुटः गगनवत्। तथा च **नामसङ्गीत्याम्**—

---

1. मणु रअणु - ङ। 
2. सहजु फुरन्तु - ङ। 
3. कहं तु - ङ।

**गगनोद्भवः स्वयंभूः प्रज्ञाज्ञानानलो महान्** । इति ।

(नामसङ्गीति 6.20, पृ० 45)

तथा च **श्रीसमाजोत्तरे**—

**सेवाकाले महोष्णीषं बिम्बं विभाव्य यत्नतः ।**
**उपसाधनकाले च बिम्बममृतकुण्डलीम् ।।**

**साधने देवताबिम्बं भावयेत् घातयेत् पुनः ।**
**महासाधनकाले तु बिम्बं बुद्धाधिपं चित्तम् ।।** इति ।।

(गु० स० 18.173–175, से० टी०, पृ० 38)

एतदेवाह **कुलिकायाम्**—"सन्ध्याभाषान्तरेण उष्णीषं बिम्बं त्रैधातुकमशेषतः। आकाशे धर्मोदयं चित्तवज्रं प्रतिष्ठाप्य सेवाकाले प्रत्याहारेण भावयेत्। ध्यानात्स्थिरीकुर्यात्" इति। अत्र **भगवतः** प्रतिज्ञा—

**सर्वचिन्तां परित्यज्य दिनमेकं परीक्षयेत् ।**
**यदि न स्यात् प्रत्ययस्तत्र तदा मे मृषा वचः ।।**

अत्र प्रत्ययो धूमादिनिमित्तम्। य एवं क्रमेण मनोरमं रत्नबुद्धबिम्बं संवेदयति। **सो परु जाणइ** इति। स परं जानातीति धर्मस्य यथाभूतगतिमवबोधम्। **अण्ण कि मुणइ कहन्त** इति। अन्यः द्वीन्द्रियक्षरसुखाभिनिविष्टः। किं मन्यते जानाति। कथ्यमानमपि न च जानातीत्यर्थः। एतदेव प्रकारान्तरेणाह—वायुवाहनतया आभासत्रयरूपत्वात् षष्ठ्युत्तरप्रकृतिरूपेन्द्रियद्वारेण निश्चित्य विषयानवलम्बते ।। 16 ।।

**[1]पहं वहन्ते णिअ मण वन्धण किअउ जेण ।**
**[2]तिहुअण सअल विफारिअ पुणु संहारिअ[3] तेण ।। 17 ।।**

**पहं वहन्ते** इत्यादि। संसारपथं वहति मतिविज्ञानधातुः सहजकायो मनसीत्यनेनेति। षडङ्गप्रयोगेन चन्द्रसूर्यावनिरोधेन प्राणस्थिरीकरणं बन्धनम्, तत्कृतं येन योगीन्द्रेण। **तिहुअण**

---

1. पहहिं वहंतउ णिअअ वंधणे – ङ. ।
2. तिहुअणु सअलु विफारिअउ – ङ., विफारिआ – ग. घ. ।
3. संहारिउ – ङ. ।

**सअल विफारिअ** इति। त्रिभुवनं कायवाक्चित्तचक्रे सकलं प्रतिरोमकूपपर्यन्तं जाग्रदवस्थाया आनन्दादिभेदेन बोधिचित्तेन विस्फारित्वा। पुनरूर्ध्वगत्या तुर्यादिक्षयेण निष्यन्दादिभेदेन संहृतमवधूत्याम्। नादबिन्दुकलातीतं सर्वशून्यधातौ प्रवेशितवज्रधरत्वं साक्षात्कृतेन इत्यर्थः ।। 17 ।।

अतएवाह—

**[1]काहिं तथागत लभए देवी कोह-गणहि ।**
**मण्डल-चक्कविमुक्क [2]अच्छउँ सहज-खणेहि ।। 18 ।।**

**काहिं तथागतेत्यादि**। किं तथागतः लभ्यते देवीक्रोधगणैः। मण्डलचक्रविमुक्तास्तिष्ठामः सहजक्षणेनेत्यभिप्रायः स्कन्धायतनाद्यादिकायवाक्चित्तमण्डलदेवताश्चेन्महासुखोपदेशसमरसीभावं गताः। तर्हि तदेवं महामण्डलमते नान्यत् पृथक् मण्डलमस्ति। तथा च **श्रीगुह्येन्द्रतिलकतन्त्रे**—

**सर्वाङ्गभावनाऽतीतं कल्पनाकल्पवर्जितम् ।**
**मात्राबिन्दुसमातीतमेतत्मण्डलमुत्तमम्** ।। 18 ।।

एतदेव पुनर्मण्डलं यथाकृतमाह—

**सहजे णिच्चल जेण किअ समरसें णिअमण-राअ[3] ।**
**सिद्धउ सो पुण तक्खणे णउ जरामरणह भाअ[4] ।। 19 ।।**

**सहजे निश्चल** इत्यादि। सहजया निजभूतप्रज्ञया। निश्चलास्खलितरूपो येन कृतः **समरसेन** चतुरानन्दैकरसेन **निजमनोरागो** वज्रानङ्गः। **सिद्धउ सो पुण** इत्यादि। सिद्धो महामुद्रासिद्धिः स वज्रधरत्वं प्राप्तः। **तत्क्षणं** क्षणानेकतया।

उक्तं च **श्रीचक्रसंवरे ( संवरोदयतन्त्रे )**—

**स्वर्गमर्त्यं च पातालैरेकमूर्तिः भवेत्क्षणात् ।**
**तत्क्षणादेव बाध्यते स्वपरसंवित्तिवेदिनः** ।। इति ।।
(संवरोदयतन्त्र 3.6)

1. कांइ तथागतु लबाए.......गणेहिं - ङ. ।
2. अच्छो.....खणेहिं - ङ. ।
3. राउ - ङ. ।
4. भाउ - ङ. ।

अतएव न जरामरणेभ्यो **बिभेतीति** ।। 19।।

महामुद्रारूपं दर्शयन्नाह—

**[1]णिच्चल णिव्विअप्प णिव्विआर**
**उअअ-अत्थमणरहिअ सुसार[2] ।**
**अइसो सो णिव्वाण[3] भणिज्जइ**
**जहिं मण[4] माणिस किम्पि न किज्जइ ।। 20।।**

**णिच्चले**त्यादि। **निश्चलम**च्युतत्वात्। **निर्विकल्प**मनुभवैकरसत्वेन, इदं तदिति विकल्पविरहात्। निर्विकारो रागविरागाभ्यां निर्गतत्वात्। सूर्याचन्द्रमसोर्निरोधात्। उदयास्तमनरहितम्। सुष्ठु शोभनं महासुखत्वात्। सारं प्रभास्वरत्वात्। **अइसो सो** इत्यादि। अतो निर्वाणं भण्यते निर्वाणशब्देनाभिलप्यते न तु स्वरूपत्वात्तन्निर्वाणम्, अप्रतिष्ठितनिर्वाणत्वात्। तत्किं विशिष्टमित्याह— **जहिं मण माणिस** इत्यादि। यत्र यावन्मनस्त्रिविधं चित्तस्य षष्ट्युत्तरशतप्रकृतयः। ताश्च बिन्दुश्च किमपि न क्रियते। एतादृशः संकल्पः किमपि न जायत इत्यर्थः ।। 20।।

अतएवाह—

**एवंकार जे वुज्झिअ[5] ते वुज्झिअ सअल असेस ।**
**धम्म-करण्ड[6] होइ सोहु रे णिअ-[7]पहुरे धरु-वेस ।। 21।।**

**एवंकार इत्यादि**। यस्तादृश एवंकारः बुद्धः प्रतीतः। सकल एवंकारैर्विश्वमशेषस्तस्यैवविश्वैकरूपत्वात्। किंभूतोऽसावित्याह—**धम्म करण्ड होइ** इति। धर्माणां स्कन्धधात्वायतनादीनाम्। करण्डकं स्थानम्। **सोहुरे** संबोधनम्। **णिअ पहुरे धरु वेस** इति। निजप्रभोश्चित्तवज्रस्य वेश आभरणं तेनालिङ्गितस्यैव तस्योदयत्वात् ।। 21।।

---

1. णिच्चलु.......अप्पु - ङ. ।
2. सुसारउ - ङ. ।
3. णिव्वाणु - ङ. ।
4. मणु - ङ ।
5. बुज्झिअउ.........सअलु असेसु - ङ. ।
6. करण्डहो सोहरे - ग. घ. ङ ।
7. पहुधर वेस - घ. ङ., पहुवारो वेस - ग. ।

पुनः साधनोद्देशमाह—

**जइ पवण-गमण-[1]दुआरे दिढ ताला वि दिज्जइ,**
**जइ तसु घोरान्धारे[2] मण-[3]दिव हो किज्जइ ।**
**जिण रअण उअरें [4]जइसो वरु अम्वरु छुप्पइ,**
**भणइ काण्ह भव[5] भुञ्जते णिव्वाणो वि सिज्झइ ।। 22 ।।**

**जइ पवण गमण दुवार** इत्यादि। पवनस्य गमनाय द्वारम्। अध ऊर्ध्वं **तत्र परिदृढमभेदं** अलु संपुटीकरणं चन्द्रसूर्यमग्निनिरोधः क्रियते। निष्पाद्यत इति कायबन्धः। **जइ तसु घोरान्धारे** इति। यदि तस्मिन् घोरान्धकारे कुम्भरूपा**स्फानकसमाधौ**। मनोऽनाहतनादौ धर्मेश्वर एव महासुखप्रकाशत्वाद्दीपः स धूमादिनिमित्तैः क्रियते प्रतिपाद्यते। तथा च **श्रीसमाजे**—

**निरोधवज्रगते चित्ते निमित्तोद्ग्रह जायते** ।इति। (गु० स० 11.41)

अनेन वाग्बन्धः। **जिण रयण** इत्यादि। जिनरत्नं स एवानाहतनादः। उपरिष्टाद्य-दाऽऽधानं षष्ठज्ञानमण्डलं बिन्दुः स्पृशति। तमालिङ्गयति। **उक्तञ्च**—"षष्ठवज्रमणौ पुंसां बुद्धानां शिरसि स्थितम्"। अनेन चित्तबन्धः। तथा च **श्रीसम्पुटे**—

**अनिलानलतृप्त्यर्थं वज्रीबीजेन चोदयेत् ।**
**बिन्दुनादसमाक्रान्तं धारावर्ष इति स्मृतम् ।।**

(सम्पुटतन्त्रे तृतीयस्य द्वितीयप्रकरणे)

**उक्तञ्च**—

**नादबिन्दुसमायुक्तो यदा भवति सर्वथा ।**
**तथा फलमिति ख्यातं वदन्ति वरयोगिनः** ।। इति।।

---

1. दुआरेहिं दिढुतालउ - ङ. ।
2. घोरंधारे - ङ. ।
3. दीवउ - ङ. ।
4. जइ.........घुप्पइ - नास्ति ग. ।
5. भवु भुंजंत हो - ङ., भवभुञ्जन्ते - घ. ।

एतेन किं स्यादित्याह—**भणइ कण्ह** इत्यादि। भणति कृष्णवज्रो। भव एव भुज्यमाने प्रज्ञासुख एवानुभूयमाने सति सर्वविरागदुःखेभ्यो निर्वृतत्वात्। निर्वाणं महामुद्रापदं सिध्यति साक्षाद्भवति। तथा च **श्रीआदिबुद्धे**—

**मध्ये प्राणप्रवेशः सरविशशिगतेर्बन्धनं सव्यवामे**
**चित्तं मुद्राप्रसङ्गे परमसुखगतं वज्रसम्बोधनं च ।**
**अब्जे वज्रध्वनिर्वा स्वकरकमलोल्लालनं सौख्यहेतो-**
**र्बीजत्यागः ससौख्यो मरणभयहरः श्रीगुरोर्वक्त्रमेतत् ।। 22 ।।**

(का० त० 5.121)

चित्तबन्धेनैव सर्वं सिध्यतीत्याशङ्क्य चित्तनिश्चलतामाह—

**[1]जो एत्थु णिच्चल[2] किअउ मण सो धम्मक्खर पास ।**
**[3]पवणहो वज्झइ तक्खणे विसआ होन्ति णिरास ।। 23 ।।**

**ज़ो एत्थु णिच्चल** इत्यादि। वज्राब्जयोगे योजयेत् षडङ्गादिप्रयोगैः। निश्चलीकृत्य चित्तम्। तत्कुत्र आह—**धम्मक्खरपास** इति। धर्माक्षराऽनाहतं नैरात्मबीजम्। तत्पार्श्व तस्मिन्नित्यर्थः। एतेन किं स्यादित्यत आह—**पवणहो वज्झइ** पवनोऽपि प्राणवायुरपि बध्यते तत्क्षणम्। अन्यत् किं भवतीत्याह—**विसआ होन्ति णिरास** इति। विषया रूपादयः। उपभुज्यमाना निरस्ता भवन्ति। संसारबन्धनं त्यजन्तीत्यर्थः ।। 23 ।।

ननु धर्माक्षरमेव कुत्र ज्ञातव्यमित्याह—

**परमविरम जहिं वेण्णि[4] उएक्खइ,**
**तहिं धम्मक्खर मज्झे लक्खइ ।**
**अइस उएसे जइ फुड़[5] सिज्झइ,**
**पवण घरिणि तहिं णिच्चल वज्झइ ।। 24 ।।**

---

1. जें - ङ. ।
2. णिच्चलु....मणु......घम्मक्खरु - ङ. ।
3. पवणु हि.....तक्खणेहिं - ङ. ।
4. वेणि उएक्ख - ग. ।
5. फुडु - ङ. ।

**परमविरमे**त्यादि। परमविरमौ चन्द्रसूर्यरागविरागौ। तत्र मध्ये उत्प्रेक्षध्वम्। तत्र धर्माक्षरं तदुक्तलक्षणं तयोर्मध्ये लक्षयेत्। **अइस उएस** इत्यादि। ईदृशेन मन्त्रनयोपदेशेन यदि स्फुटमेतत्सर्वं सिध्यति सम्पद्यते। तदा पवनगृहिणी-उक्तलक्षणा निश्चितं बध्यते। निश्चली-भवतीत्यर्थः ।। 24।।

नन्वेतस्मिन्प्राणबन्धे निश्चलीभूते सति तत्र धर्माक्षरं महासुखवज्रं किंरूपः कुत्र वसतीत्याह—

**वर रअण गिरि-सिहर[1] उतुङ्ग मुणि सवरें जहिं किअ[2] वास ।**
**णउ सो लंघिअ[3] पञ्चाणणेहि करिवर दूरिअ आस[4] ।। 25।।**

**वर रअण सिहरे**त्यादि। वररत्नगिरिः। स एव पूर्वोक्तमेरुः। तस्य शिखरं शृङ्गं कमलभवनानन्दरूपं सकलमहासुखाधारत्वात्। उत्तमाङ्गं महती स्थली। **सवरें जहिं किअ वास** इति। सवरेण तथारूपापन्नधर्माक्षरेण, ज्ञानवज्रेण भगवता यत्र कृतो वास इति। किं विशिष्ट इत्याह—**णौ (णउ) सो लंघिअ** इत्यादि। नौ लङ्घितानाक्रान्ता, पञ्चाननैः पञ्चमण्डलमुखैः षष्ठस्य ज्ञानमण्डलरूपत्वात्। **करिवर दूरिअ आसे**ति। करिवरः पशुः। चन्द्रसूर्यौ तयोर्दूरत उल्लङ्घना सा। उक्तञ्च—"**चन्द्रसूर्यौ महापशू**" इति। अयमभिप्रायः। चन्द्रसूर्यमण्डलवाहिण्य वाय्वारूढविज्ञानधातुत्वेन सर्वत्र सर्वदा सर्वतोभावेन स्थितोऽपि भगवान् महासुखवज्रो नाधिगम्यत इति। पञ्चमण्डलात्मकप्राणसिंहेन करिवरस्य चित्तगजेन्द्रस्य भूमिरिति ।। 25।।

तथापि कर्मजे देहे नियमेन कुत्र वसतीत्याह—

**एहु सो गिरिवर[5] कहिअ मइँ एहु सो महासुह-ठाव[6] ।**
**एक्कु[7] रअणि सहजखण लब्भइ महासुह जाव[8] ।। 26।।**

---

1. सिहरु - ङ ।
2. किउ वासु - ङ ।
3. लंघिउ - ङ ।
4. आसु - ङ ।
5. गिरिवरु - ङ ।
6. ठावुं - ङ ।
7. एक्का....खणु - ङ ।
8. जावं - ङ ।

**एहु सो गिरिवर** इत्यादि। मया कृष्णवज्रेण एतदेव गिरिवरं कथितं नान्येन कथितं मद्विधाः कथितुं समर्था इति भावः। **एहु सो महासुह ठाव** इति। विवृत्त्या एतदेव महासुखस्थानं पूर्वोक्ता स्थली। **एक्खु सो णियमहु** इत्यादि। अत्रैव तत्सहजक्षणं वज्रधरावस्था पर्यन्तमभ्यस्यताम्। अतएव **लब्भइ महासुह जाव** इति। यावत् त्रयोदश-भूमीश्वरवज्रधरपदं लभ्यते ।। 26।।

किंभूतोऽसौ वज्रधर इत्याशङ्क्याह—

**[1]सब जगु काअ-वाअ-मण मिलि[2] विफुरइ तहिसो दूरे ।**
**सो वितक्क[3] भङ्गे महासुह णिव्वाण[4] एक्कु रे ।। 27।।**

**सबजगु** इत्यादि। सर्वे ते वैरोचनादयस्तथागता रूपादिस्कन्धरूपेण जगदाकाराः। तेषां कायवाक्चित्तपृथिव्यादिधातुरूपिणो लोचनादिदेव्यस्ताभिर्मिलिताः। एकलोलीभूत-महारागाभिसंबोधिलक्ष्मीलक्षणः। वज्रधरशरीरं नीरक्षीरन्यायेन एभिः समरसीभूतमिति भावः। **विफुरइ** इति। तत्रैव वज्रधरशरीरे, तदेव कायवाक्चित्तादिकं जलतरङ्गन्यायेन विस्फुरति। अनेन त्रैधातुकं वज्रशरीरम् इत्यादि। एतदेव स्पष्टयन्नाह—**सो वितक्क** इत्यादि। एकैको महासुखराजको वज्रधरः नानाप्रकारेण प्रतिभासते ।। 27।।

देहनियमेन कुत्र वसतीत्याह—

**एक्कु ण किज्जइ मन्त[5] ण तन्त, णिअ [6]घरिणी लइ केलि करन्त[7] ।**
**णिअ[8] घरे घरिणी जाव ण मज्जइ, ताव कि पञ्चवण्ण[9] विहरिज्जइ ।। 28।।**

---

1. सब्बु - ङ ।
2. मिलेबि फुरत्तहो - ङ ।
3. एहु - (शा० वा०). एअ - ङ ।
4. णिव्वाणहि एकउ - ङ ।
5. मंतु ण तंतु - ङ ।
6. करंतु - ङ ।
7. घरणि - ग. ।
8. णिअघर - ग. ।
9. पञ्चवर्ण - ग., पंच वर्णे - ङ ।

**एक्कु ण किज्जइ ण मन्त** इत्यादि। एकमपि न क्रियते मन्त्रतन्त्रजापस्तन्त्रपाठः। केनैतदित्याह—**निजगृहेत्**यादि। **निजगृहिणी** ज्ञानमुद्रा स्वचित्ताभासा सद्गुरूपदेशेन गृहीत्वा **केलि** मनोनुकूलमुद्रायां सहजक्रीडां कुर्वन्ति योगिन इति। तथा च **श्रीआदिबुद्धे**—

**चित्तस्याभासमात्रा स्वमनसि जनितादर्शबिम्बोपमा वै**
**योगीन्द्रैः सेवनीया सकलजिनसुतैः सेविता या च बुद्धैः ।**
**सा ज्ञानार्च्चिः प्रबुद्धा दहति सविषयान् मारवृन्दं समस्तम्**
**रागादींश्चापि काये दहति सममुखं योगिनां वर्षयोगात्** ।। इति ।।

(का० त० 5.113)

एतस्यां भगवत्यामासक्तेन योगिना मन्त्रतन्त्रग्रहो न कर्तव्यः। इत्यस्यायमर्थः। सैव च मनसो बोधिचित्तस्य मननान्मन्त्रः। सैव च तत्त्रिकुम्भधारण इति।

धातुपाठाज्जिनकुम्भधृके(ते)न तु तत्र तदासक्तेन सर्वमेव क्रियत इति। तथा च **श्रीसमाजे**—

**न मन्त्रजापो न तपो न होमो**
**न माण्डलेयं न च मण्डलं च ।**
**स मन्त्रजापः स तपः स होम-**
**स्तन्माण्डलेयं तन्मण्डलं च** ।। इति।। (हे० त० 1.10.43)

**णिअ घरे हि** इति। सर्वशून्यताऽवधूतीस्थानं निजगृहम्। समहामुद्रातन्त्रगृहिणी सैव **न मज्जति** न लीयते। **तावत्किं पञ्चवर्णे**त्यादि। तावत्किं पञ्चवर्णैः पञ्चाकाराभिसंबोधिरनेकसत्त्वाशयभेदेनानेन भुजमुखवर्णसंस्थानैर्व्यवह्रियत इति। तथा च **(श्री)आदिबुद्धे**—

**कर्ममुद्रासमापत्त्या ज्ञानमुद्रावलम्बनैः ।**
**महामुद्रैकयोगेन वृद्धिं याति तदक्षरम्** ।। इति।। (सेकोद्देश 93)

ततः

**सर्वतः पाणिपादाद्यं सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतः स्मृतिमांल्लोके सर्वमावृत्य तिष्ठति** ।। (चक्रसंवर 50.26)

तस्या एव दिव्यमुद्राया महामुद्राफलसाधनोपदेशपदं नियमेन दर्शयेदिति ।। 28 ।।

पुनस्तदेवाह—

**[1]एते जप-होमे मण्डलकम्मे,**
**[2]अणुदिण अच्छसि काहिउ[3] धम्मे ।**
**[4]ते विणु तरुणि णिरन्तर णेहें,**
**वोहि कि [5]लाभइ एण वि देहें ।। 29 ।।**

**एते जपहोमे**त्यादि। एतेन बाह्यभूतेन होमेन जपेन मण्डलकर्मणानुदिनं तिष्ठसि बहिर्निबद्धमनसाढक्करिरूपेण निष्फल इत्यर्थः। कथमेतत्सर्वं निष्फलमित्याह—**ते विणु** इत्यादि। तेन विना सदैव रागमयत्वात्तरुणी सैव दिव्यमुद्रा। तस्या निरन्तरगमनावच्छिन्नं आनन्दादिक्रमेणानुरागेणोत्पादस्तेन स्नेहेन तरुणीनिस्तरङ्गस्नेहेन। **वोहि कि लाभइ** इत्यादि। बोधिर्महामुद्रा सा किं तेन लभ्यते। पूर्वोक्त एवंकारो, देहेन बिना न लभ्यत इत्यर्थः॥ 29 ।।

**जें बुज्झिअ[6] विरल सहजखण[7] काहिं वेअ-पुराण ।**
**तें तुड़िअ[8] विसअ-विअप्प जगु रे असेस परिमाण ।। 30 ।।**

**जें किअ[9] णिच्चल मण-रअण णिअ घरिणी लइ [10]एत्थ ।**
**[11]अइसो सो वाजिर[12] णाहु रे मयिं वुत्तो परमत्थ[13] ।। 31 ।।**

**जें बुज्झिअ** इत्यादि। सुगमम्। **जें किअ णिच्चले**त्यादि। येन कृतं प्रचण्डचण्डाली-वह्निं द्रावयित्वा चालयितुमशक्यत्वान्निश्चलं मनोरत्नं बोधिचित्तम्। किं कृत्वेत्याह—**णिअ**

---

1. एसो - ग. घ., एअ - ङ ।
2. अणुदिणु - ङ ।
3. काइं अधम्में - ङ ।
4. तो - ग. घ., तई - ङ ।
5. लब्भइ -ग. घ. ङ ।
6. बूझिअ - ग., बुज्झिउ - ङ ।
7. खणु - ङ ।
8. तोड़िअ - ग., तुड़िअउ - ङ ।
9. किउ विच्चलु मण रअणु - ङ ।
10. एत्थो - ग., एत्थु - ङ ।
11. सोइ - घ., सो - ङ ।
12. वाजिरधरु - ङ ।
13. परमत्थो - ग., बुत्तउ परमत्थु - ङ ।

**घरिणी लइ** इत्यादि। निज गृहिणीं तामेव दिव्यमुद्रां तत्रवंकारमहासुखस्थाने। **अइसो सो वाजिर** इत्यादि। स एव वज्रधरो नाथः। कायवाक्चित्तप्रभुः। रे सम्बोधाक्षरम्। **वुत्तो परमत्थ** इति। उक्तो मया कृष्णवज्रेण परमार्थोऽकृत्रिमोऽयमर्थः। अत्र नान्योऽस्तीत्यर्थः ।। 30-31।।

एतदेव दृष्टान्तमाह—

**[1]जिम लोण विलिज्जइ पाणिएहि[2] तिम घरिणी[3] लइ चित्त।**
**समरस[4] जाइ तक्खणे जइ पुणु ते[5] सम णित्त ।। 32।।**

**जिम लोण विलिज्जइ** इत्यादि। यथा लवणं विलीयते **पानीयेन** तथा **गृहिणीं** ज्ञानरूपिणीं गृहीत्वा चित्तं बोधिचित्तं समरसत्वं याति। तथा च **श्रीहेवज्रे**—

**शुक्राकारोभवेद् भगवान् तत्सुखं कामिनीसुखम्।** इति।

(हि० त० 1.8.50)

तदुभेऽपि शुक्रसुखे आधाराधेयरूपे। सर्वशून्यस्वभावसुखे। समरसमेकलोलीभावं गच्छत इति तत्क्षणम्।

तथा च **श्रीआदिबुद्धे**—

**आधाराधेयसंबन्धो यावदक्षरतां व्रजेत् ।**
**चित्तमक्षरताप्राप्तं नाधाराधेयलक्षणम् ।।** इति।। (सेकोद्देश 144)

तथा च **संपुटे**—

**नासापुटद्विरन्ध्रेणागतः सुकाल उच्यते ।**
**गतश्चैव दुष्कालः स्यात्तयोरेकः प्रकीर्तितः ।।**

---

1. जिवं लोणु - ङ ।
2. पाणि अहिं - ङ ।
3. धरणी लइ चित्तु - ङ ।
4. समरसु जाइअ - ङ ।
5. तहे समु णित्तु - ङ ।

असहायो भवेदेकः कालस्त्वचिन्त्यतां गतः ।
प्राणायामविहीनस्तु प्रश्वासाश्वासलक्षणः ।।

गत्यागतिविनिर्मुक्त एकः समय उच्यते ।
न रागो न विरागश्च मध्यमा नोपलभ्यते ।।

रागेण च विरागेण द्वाभ्यामस्तमनाहतम् ।
घृते घृतं यथा क्षिप्तं मिश्रीभूतमनाविलम् ।।
तथा रागविरागाभ्यामेकः समरसक्षणः ।। इति ।।

**जहि पुणुताहि णित्त** इति। यदि पुनस्ताभ्यामन्योन्यं नित्यत्वमवच्छिन्नम्। यदा पुनरेतत्स्यादिति। अयमर्थः तथा तथा दर्शितोपायैः शुक्ररजो-रूपयोरन्योन्यमनवच्छिन्नम्। नान्यत्वे सति। शुक्रस्वभावश्चन्द्रस्वभावः सम्भोगकायः। रजःस्वभावः सूर्याभासनिर्माणकाय-श्चास्तंगते। सुखवर्तिरूपगृहिण्या सह। एतद्बोधिचित्तं उभययोगाभ्यां पिण्डीभूयोत्पत्तिप्रलयरूप-संसारमार्गमतिक्रम्य समरसीभवति निष्यन्दरूपः श्रीहेरुको भवति। तथा च **श्रीसम्पुटे**—

यदा कण्ठे महारागरूपेण चन्द्रमा स्थितो भवति ।
सम्भोगस्तु तदाख्यातो बुद्धानां काय उत्तमः ।
नासाग्रे सदा चासौ वज्राग्रे तु यदा स्थितः ।
अस्तंगतस्तु सम्भोगः कायोऽपि हि तदा भवेत् ।
भगमध्ये गतश्चासौ सर्षप इति विश्रुतः ।
सूर्यरूपसमाख्यातो निर्माणकाय उच्यते ।
बुद्धानां बोधिसत्त्वानां स्फरणं तेन जायते ।
पद्मनर्तेश्वरो राजा पद्मप्रभुरिति स्मृतः ।। इति ।।

(वसन्ततिलके 10.17-21)

**श्रीकृष्णवज्रपादानां दोहाकोषस्य टीका समाप्ता।**

**कृतिरियं पण्डित अमृतवज्रस्य**। ग्रन्थप्रमाणं संख्याः 400 । शुभम्।
लिखितं श्रीरूपराजेन स्वात्मप्रबोधनार्थम् ।।

•

# རྩོམ་གྱི་ངོ་སྤྲོད་མདོར་བསྡུས།

## བསྟོད་པ་ཁག་གཉིས། ༡ - ༨

རྡོ་རྗེ་ནག་པོ་ཆེན་པོའི་བསྟོད་པ་བརྒྱད་པ་དང་རྡོ་རྗེ་རྣལ་འབྱོར་ལ་བསྟོད་པ་སྙིང་པོའི་དོན་ཞེས་བྱ་བའི་བསྟོད་པ་འདི་གཉིས་པོ་ནེའུ་ཡོཀ་འཛམ་གླིང་ཆོས་ལུགས་ཁག་གི་མཐོ་རིམ་སློབ་གཉེར་ཁང་ནས་ཐོབ་པའི་བསྟོད་པ་སུམ་ཅུ་སོ་ལྔའི་ཕྱོགས་བཏུས་ལས་བླངས་པ་ཞིག་ཡིན།

## མི་གནས་མྱང་འདས་ཀྱི་ཁམས་དང་ཆོས་འབྱུང་མངོན་བྱང་གི་སྦྱོར་བ། ༩ - ༡༨

དྷཱིཿའདོན་ཐེངས་སྔ་མ་རྣམས་སུ་སློབ་དཔོན་འཕགས་པ་ལྷས་མཛད་པའི་སྤྱོད་པ་བསྡུས་པའི་སྒྲོན་མའི་ལེའུ་དང་པོ་ནས་བདུན་པ་བར་གྱི་བསྡུས་དོན་ཧིན་སྐད་དུ་ཕབ་བསྒྱུར་བྱས་ཏེ་བཀོད་ཟིན། འདོན་ཐེངས་འདིར་གཞུང་འདི་ཉིད་ཀྱི་ལེའུ་བརྒྱད་པ་དང་དགུ་པ་གཉིས་ཀྱི་ཧིན་སྐད་དུ་ཕབ་བསྒྱུར་ཞུས་པ་བཀོད་ཡོད།

## ནང་པའི་གསུང་རབ་ཉམས་པ་ཁག་གི་ཕྱོགས་བཏུས། ༡༩ - ༢༢

ད་ཆ་འགྲེལ་པ་མེད་པའི་དབང་གིས་གཞུང་རྣམས་ལས་ནང་པའི་གསུང་རབ་ཉམས་པ་ཁག་ཐོབ་པ་ནི་ཧ་ཅང་དཀོན་པོ་ཆགས་ཡོད། དུས་དེབ་འདོན་ཐེངས་འདིའི་ནང་དབང་མདོར་བསྟན་པའི་བརྗོད་བྱང་དང་། དབང་མདོར་བསྟན་པའི་དཀའ་འགྲེལ་དང་། ལས་དང་པོའི་སྒྲོན་མ་ཞེས་བྱ་བའི་གཞུང་རྣམས་ལས་ཕྱོགས་བཏུས་བྱས་པའི་གསུང་རབ་ཉམས་པ་ཁག་བཀོད་ཡོད། ལས་དང་པོའི་སྒྲོན་མ་ནི་ཛ་པཱན་ནས་ཕྱི་ལོ་ ༡༩༩༣ ལོར་ Indogaku Mikkyogaku kenkyu ཞེས་པའི་དུས་དེབ་སློབ་དཔོན་ Prof.Yoshi Miyasaka Feli. ཡི་བོད་ཕྱེང་ཁོངས་སུ་དཔར་བསྐྲུན་ཞུས་འདུག དབང་མདོར་བསྟན་པའི་བརྗོད་བྱང་ནི་ཕྱི་ལོ་ ༡༩༩༦ ལོར་ Rivista Degli, Studio

Orientali LXX(1-2), ནས་དཔར་བསྐྲུན་ཞུས་ཤིང་། དབང་མདོར་བསྟན་པའི་དཀའ་འགྲེལ་ནི་ཕྱི་ལོ་ ༡༩༩༨ ལོར་ Taisho Daigaku Sogo Bukkyo-Kenkyojo, Nenpo,16 (1994) ནས་དཔར་བསྐྲུན་ཞུས་པ་ཞིག་རེད་འདུག

## དུར་ཁྲོད་ཆེན་པོ་བརྒྱད་ཀྱི་ངོ་སྤྲོད། ༣༣ - ༨༢

ནང་པའི་སློམ་དང་ཁྱད་པར་གསང་སྔགས་ཀྱི་སྒྲུབ་པའི་ནང་དུར་ཁྲོད་ཤིན་ཏུ་གལ་ཆེ་བ་ཡིན། ནང་པའི་གསང་སྔགས་ཀྱི་གཞུང་རྣམས་སུ་འདིའི་རང་བཞིན་གྱི་སྐོར་བསྟན་པ་ཐོབ་རྒྱུ་ཡོད། ནང་པའི་རྒྱུད་ལས་ཁྱད་པར་བདེ་མཆོག་རྒྱུད་ཀྱི་དཀྱིལ་འཁོར་རྣམས་སུ་དུར་ཁྲོད་ཆེན་པོ་བརྒྱད་ཀྱི་ངོ་སྤྲོད་བསྟན་ཡོད། དུས་ཁྲོད་འདི་དག་ནི་སྐྱེ་བོའི་མངོན་རྟོགས་ཀྱི་གནས་སྐབས་རྣམས་ཀྱི་བདག་ཉིད་མངོན་པར་གསལ་བར་བྱེད་པ་ཡང་ཡིན།

ནང་པའི་རྒྱུད་ཀྱི་སྒྲུབ་ཐབས་ཀྱི་གཞུང་རྣམས་སུ་གསལ་བའི་དུར་ཁྲོད་ཀྱི་སྐོར་ལས་དེའི་རང་བཞིན་ཇི་ལྟར་འཁོད་པ་ལྟར་ན་འདི་ནི་རྒྱུད་ཀྱི་སློམ་སྒྲུབ་ཀྱི་ཆེད་དུ་ཉེ་བར་མཁོ་ཞིང་ཡིད་དུ་འོང་བའི་གནས་ཤིག་ཡིན། དེ་དག་ལ་བརྟེན་ནས་ཇུ་འཕྲུལ་ཆེན་པོ་ཐོབ་པར་བྱེད་པ་ཡིན། བྲིས་རྩོམ་འདིའི་ནང་དུར་ཁྲོད་དེ་དག་ཏུ་གནས་པའི་ལྗོན་ཤིང་དང་། གནས་བདག་དང་། དེའི་རིགས་དང་། ཕྱོགས་སྐྱོང་། བཙོན་པ། ཕྱག་མཚན། ཀླུ། སྤྲིན། མཆོད་རྟེན་དང་རི་བོ་ལ་སོགས་པའི་ངོ་སྤྲོད་རྒྱས་པར་ཞུས་ཡོད།

## པདྨ་བཛྲའི་བཞེད་པ་ལྟར་གྱི་དཀྱིལ་པ་ལ་སོགས་པ་དེ་ཁོ་ན་ཉིད་བཞི། ༨༣ -༩༠

བྲིས་རྩོམ་འདིའི་ནང་སློབ་དཔོན་པདྨ་བཛྲས་མཛད་པའི་མངོན་སྤྲོད་ཀྱི་ལས། སྟོན་པ་བཅོམ་ལྡན་འདས་ཀྱི་ལུས་མེད་སེམས་ཅན་རྣམས་དང་འབྲེལ་བའི་རྒྱུད་ཀྱི་ལས་དྲུག་དང་དཀྱིལ་པ་ལ་སོགས་པ་དེ་ཁོ་ན་ཉིད་བཞི་བཅས་དེ་དག་གི་འགྲེལ་བཤད་ཡོད།

## གནས་སམ་གདན་ལ་དཔྱད་པ། ༧༡ – ༨༠

འདིར་ཀུཌྜི་ཀཱ་ཡི་དཔར་བསྐྲུན་ཁག་གཉིས་ཀྱི་ངོ་སྤྲོད་ཞུས་ནས་དེའི་ནང་བསྟན་པའི་གནས་ཉི་ཤུ་རྩ་བཞིའི་སྐོར་དང་། གནས་ཞེས་པའི་ཚིག་གི་འགྲེལ་བཤད་བྱས་ནས་རྒྱུད་སྣང་དང་རྒྱུད་གཞུང་སྣ་ཚོགས་སུ་གསལ་བའི་གནས་རྣམས་དང་། དེ་དག་གི་དབྱེ་བའི་སྐོར་ལ་མདོར་བསྡུས་ཙམ་བསྟན་ཡོད། དེ་རྗེས་ནང་པའི་རྒྱུད་གཞུང་རྣམས་དང་ཀུཌྜི་ཀཱ་གཉིས་ཀའི་ནང་གནས་ཀྱི་གྲངས་ཉེར་བཞི་ཡོད་པ་ཙམ་ལས་ཕན་ཚུན་དབར་གཞན་གང་ཡང་མཚུངས་ཆོས་མེད་ཀྱང་རྒྱུད་སྣང་གི་དཀར་ཆག་གི་ནང་རིམ་པ་བཞིན་ཐོབ་པ་བཀོད་ཡོད། ཤཱཀྟཔཱིཋཿནང་དཔར་བསྐྲུན་ཞུས་པའི་གནས་ཀྱི་གཏན་འབེབས་དང་དེའི་ལྷན་ཐབས་སྣ་ཚོགས་ལ་གཞི་བཅོལ་གྱིས་དཀར་ཆག་འདི་དག་གི་དཔྱད་པའང་བཀོད་ཡོད།

## ཆེས་དཀོན་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེ། ༨༡ – ༩༣

ཀླིཿདུས་དེབ་འདོན་ཐེངས་སུམ་ཅུ་སོ་གཅིག་པའི་ནང་འགོ་བརྗོད་འདིའི་འོག་གལ་ཆེའི་གསུང་རབ་ལག་བྲིས་མ་བདུན་ཅུ་དོན་གཉིས་ཀྱི་སྐོར་བསྟན་ཟིན་པ་དང་། ད་ལན་འདོན་ཐེངས་འདིའི་ནང་རྟོག་པའི་གཞུང་བདུན་ཅུ་དོན་གཅིག་གི་ངོ་སྤྲོད་ཞུས་ཡོད།

རྟོག་བརྗོད་ཞེས་པའི་ཚིག་གི་དོན་ནི། ལེགས་པ་དང་། བསླབ་པའི་བདག་ཉིད་ཅན། དཔའ་འཛངས་ལྡན་པའི་བྱ་བའམ་ལས་བཟང་པོ་ཞེས་བྱ་བ་ཡིན། ཚིག་དོན་གཞན་དུ་ནི་རྟོག་བརྗོད་ཞེས་པ་ནི་དགེ་བ་དང་རྒྱ་ཆེ་བའི་སྤྱོད་པ་ཡང་ཡིན། སྐྱེས་རབས་རྣམས་སུ་གསལ་བ་བཞིན་འདིའི་ནང་སངས་རྒྱས་ཀྱི་སྐུའི་སྐྱེ་བ་འདི་དང་སྔ་མ་རྣམས་དང་འབྲེལ་བའི་དམ་པའི་སྤྱོད་པ་རྣམས་ཀྱི་སྐོར་ལ་བསྟན་ཀྱང་། དེ་གཉིས་ཀྱི་ཁྱད་པར་ནི་སྐྱེས་རབས་ཀྱི་གཞུང་དུ་སངས་རྒྱས་ཀྱི་སྐུའི་སྐྱེ་བ་སྔ་མ་རྣམས་ཀྱི་སྐོར་ལ་བསྟན་ཅིང་། རྟོག་བརྗོད་དུ་སངས་རྒྱས་ཉིད་ཀྱི་སྐོར་ལ་བརྗོད་པ་ཤ་སྟག་ཡིན།

## རྙིང་རྒྱུད་རྗེས་འབྲངས་ཀྱི་གཏེར་ཆོས་བྱུང་ཚུལ། ༩༨ – ༡༠༨

ཧཱུཾ༔དུས་དེབ་སུམ་ཅུ་སོ་གཅིག་པའི་ནང་རྙིང་རྒྱུད་རྗེས་འབྲངས་ཀྱི་ཨ་ནུ་ཡོག་དང་། ཨ་ཏི་ཡོགའི་ངོ་སྤྲོད་སྤྱི་ཙམ་ཞུས་ཟིན། འདོན་ཐེངས་འདིར་རྙིང་རྒྱུད་རྗེས་འབྲངས་ཀྱི་གཏེར་ཆོས་བྱུང་ཚུལ་གྱི་ངོ་སྤྲོད་སྤྱི་བཏང་ཙམ་ཞུས་ཡོད།

གཏེར་ཆོས་ཀྱི་སྐོར་ལ་མདོ་ཙམ་བརྗོད་ན། འདི་འདྲ་བའི་གསུང་རབ་ཀྱི་གཞུང་རྣམས་སྐྱེ་བོ་ཕལ་པའི་མངོན་སུམ་གྱི་སྤྱོད་ཡུལ་དུ་མ་གྱུར་པས་ལོ་དུས་འགའི་རིང་མི་སྣང་བའི་ཚུལ་དུ་སྦས་པའམ་གསུང་རབ་ཡི་གེའི་གཟུགས་སུ་བཀོད་པའི་གཏེར་ཆོས་གནས་སྐབས་གཞུང་དེ་དག་གི་སྣོད་དུ་གྱུར་པའི་གདུལ་བྱ་མ་སྐྱེད་པས་མཁའ་འགྲོ་མ་རྣམས་ཀྱི་བསྲུང་ཞིང་མི་མངོན་པའི་ཚུལ་དུ་སྦས་ཏེ་བཞག་པ་ཡིན། དེ་དག་འདོན་པའི་དུས་སུ་ལ་བབས་པ་ན་གྲུབ་པའི་སྐྱེས་བུ་རྣམས་ལ་རང་གི་ལྷག་པའི་ལྷས་ལུང་བསྟན་མཛད་པ་དང་། མཁའ་འགྲོ་མ་རྣམས་ཀྱིས་སྔར་གྱི་གྲུབ་པའི་སྐྱེས་བུ་རྣམས་ལ་དབང་བསྐུར་ནས་གཏེར་ཆོས་དེ་དག་ལས་གསུང་རབ་རྣམས་གཏོན་པའི་ཕྱིར་གནང་བ་སྦྱིན་པར་བྱེད་པའོ།།

## སངས་རྒྱས་ཀྱི་འདྲ་སྐུའི་བཟོ་རིག་ལ་རྒྱ་ཆེར་དཔྱད་པ། ༡༠༩ – ༡༢༠

ཨཏྲིཡཏིལཀ་དང་འདྲ་སྐུའི་མཚན་ཉིད་ལ་སོགས་ནང་པའི་གཞུང་མང་པོ་ཞིག་ཐོབ་རྒྱུ་ཡོད། དེ་དག་གི་ནང་སངས་རྒྱས་དང་བྱང་ཆུབ་སེམས་དཔའ་རྣམས་ཀྱི་འདྲ་སྐུ་ཐ་དད་པའི་མཚན་དང་། རང་བཞིན་དང་། བསྐྲུན་པའི་ཐབས་ཚུལ་རྒྱས་པར་བསྟན་ཡོད་ཀྱང་སངས་རྒྱས་བཅོམ་ལྡན་འདས་ཀྱིས་རང་ཉིད་ཀྱི་འདྲ་སྐུ་བཞེངས་པ་དང་དེ་ལ་མཆོད་པའི་ཕྱིར་དགག་པ་མཛད་ཡོད། དེ་ལྟ་ནའང་འདྲ་སྐུ་བཞེངས་པའི་ཐབས་ཚུལ་འདི་དུས་ནམ་འགོ་ཚུགས་པ་དང་། ཇི་ལྟར་འགོ་ཚུགས་པའི་སྐོར་ལ་བྲིས་རྩོམ་འདིའི་ནང་གསལ་བཤད་ཞུས་ཡོད། དེ་དང་ཆབས་ཅིག་སངས་རྒྱས་ཀྱི་འདྲ་སྐུ་བཞེངས་ཕྱོགས་ལ་རྒྱ་ནག་དང་བོད་ནང་ནང་པའི་བྲིས་རྩོམ་གྱི་ལོ་རྒྱུས་འཆད་ཚུལ་གྱི་སྐོར་ལའང་གླེང་ཡོད།

## བུ་སྟོན་རིན་པོ་ཆེས་མཛད་པའི་རྒྱུད་སྡེ་སྤྱིའི་རྣམ་གཞག་བསྡུས་པ། ༡༣༡ – ༡༣༦

བུ་སྟོན་རིན་པོ་ཆེས་མཛད་པའི་"རྒྱུད་སྡེ་སྤྱིའི་རྣམ་གཞག་བསྡུས་པ་རྒྱུད་སྡེ་རིན་པོ་ཆེའི་གཏེར་སྒོ་འབྱེད་པའི་ལྡེ་མིག"ཅེས་པའི་གཞུང་འདིའི་ནང་རྒྱུད་སྡེའི་སྐོར་དོན་སྙིང་ཤིན་ཏུ་བསྡུས་ཏེ་བསྟན་ཡོད། གཞུང་འདི་ཉིད་ཧིན་སྐད་ཐོག་ཕབ་བསྒྱུར་གྱིས་སྡེ་ཚན་བགོས་ཏེ་འདོན་རྒྱུའི་རིམ་པ་ལས། འདོན་ཐེངས་སྔ་མའི་ནང་ཕར་ཕྱིན་ཐེག་པ་ལས་གསང་སྔགས་ཀྱི་ཐེག་པ་ཁྱད་པར་དུ་འཕགས་ཚུལ་བསྟན་ནས་ད་ལན་འདིར་རྒྱུད་སྡེའི་དབྱེ་བ་བསྟན་པའི་སྐབས་ཀྱི་ཆ་ཤས་ཤིག་ཧིན་སྐད་ཐོག་ཕབ་བསྒྱུར་བྱས་ཏེ་བཀོད་ཡོད།

## དོ་ཧཱ་མཛོད་ཀྱི་འགྲེལ་པ། ༡༣༧ – ༡༤༤

སློབ་དཔོན་ནག་པོ་ཞབས་ཀྱིས་མཛད་པའི་དོ་ཧཱ་མཛོད་ལ་པཎྜིཏ་འཆི་མེད་རྡོ་རྗེས་མཛད་པའི་འགྲེལ་པ་གཅིག་ཡོད་པ་འདི་ད་བར་དཔར་དུ་ཐོན་མེད་ཅིང་། སློབ་དཔོན་ནག་པོ་ཞབས་ཀྱི་དོ་ཧཱའི་འགྲེལ་པ་མེཁལཱ་དཔར་དུ་ཐོན་ཡོད་པ་རེད། མ༠ མ༠ ཧརཔྲསཱདཤཱསྟྲི་དང་། པྲོ༠ སྲོ༠ བཱགཆིདང་། ཀྵཡཱཊྚི་གསུམ་གྱི་དོ་ཧཱའི་རྩ་བ་རྣམས་ཀྱི་དཔར་བསྐྲུན་ཞུས་པ་ཐོབ་རྒྱུ་ཡོད། གོང་སྨོས་པར་མ་ལ་གཞི་བཅོལ་གྱིས་ལེགས་བཅོས་བྱས་ཏེ་འཆི་མེད་རྡོ་རྗེའི་འགྲེལ་པ་དང་མཉམ་དུ་འདིར་དཔར་བསྐྲུན་ཞུས་ཡོད།

●●●

## ABSTRACT OF ARTICLES

*Vajra-mahākālastotra* 1-4

The *Vajra-mahākāla Stotra* and *Vajra-yoginī Piṇḍārtha-stuti* have been taken from a collection of 35 hymns obtained from Institute for Advance Studies of World Religions, New York (U.S.A.).

*Immaculate Body and Awakened Wisdom* 5-18

We have already published chapters 1 to 7 of Āryadeva's *Caryāmelāpaka* in brief Hindi translation. Below are given the translation of the eighth and ninth chapters of the same work.

*Collection of lost Bauddha Vacanas* 19-22

The paucity of commentaries preclude the chance of obtaining lost Bauddha Vacanas in good number. In the present issue we are placing before readers some sacred utterances of Tathāgata Buddha selected from three minor treatises, namely *Sekoddeśa-ṭippaṇī, Sekoddeśa-Pañjikā* and *Ādikarma-pradīpa.* The last treatise is published in Prof. Yoshi Miyasaka Felicitation Volume appearing in a journal called "Indogaku Mikkyogaku Kenkyu" of Japan. This issue was published in 1993.

The *Sekoddeśa-ṭippaṇī* was published in *Rivista Degli, Studio Orientali*, LXX (1-2) in 1996.

The *Sekoddeśapañjikā* was published in *Taisho Daigaku Sōgō Bukkyo-Kenkyojo, Nenpo, 16 (1994).*

*Aṣṭa-Mahāśmaśāna : Nature and Significance* 23-42

In Buddhist meditational practices specially of esoterism, cemetery occupies a prominent place. Detailed descriptions of cemeteries are found

in Buddhist treatises-special illustrations of these occur in the maṇḍalas of *Saṁvara Tantra.* Curiously, these cemeteries are symbolic of the eight states of mind in a spiritual sense. What is alluded in the tantras makes it clear that cemetery is a serenely nice abode of practice blessing the beings of enormous wealth and empowerment.

The paper presented here gives large descriptions of "Śmaśāna" with its attributes : trees, guardians, colour, lords, vāhana (vehicle), āyudha (weapon), nāga, megha, caitya and mounts.

*Śaṭa-Karma and Ābhicārika-Karma in the Views of Padmavajra* *43-50*

The paper deals with the *Ābhicārikakarmas* and the Tāntrika six yogic actions as prescribed by Buddha related with transcendent aspects. The subject has been elaborated by Padmavajra.

*The Pīṭha-sthānas Reviewed* *51-60*

The journal reviews descriptions and comments on the 24 pīṭhas as occur in the two recensions of the *Kubjikāmata.* Here are defined the term pīṭha along with its kinds and nature as found in *Tantrāloka* and many other esoteric texts. It has been noticed that notwithstanding the no. 24 in all the esoteric works including the *Kubjikāmata*, there is no definite order in placing the shrines, although these are found in sequence in a list of *Tantrāloka.*

The pīṭhas are also reviewed here according to various inventories given in the *Śākta-pīṭhas* and their appendices.

*Source Material of Rare Texts* *61-93*

In the 31st issue of our journal we noticed 72 important manuscripts. In this issue we provide information of 71 Avadāna treatises.

The term 'Avadāna' essentially means right, educative, heroic deed and a noble task. In other words it means sacred and a character full of

virtues. Like the *Jātaka* stories, Avadānas have tales of noble acts. Thus *Avadāna* literature is closely linked with the *Jātakas*. The difference is only that while *Jātakas* are stories of the past lives of Buddha, Avadānas are meant to pray to him.

*Emanation of rñiṅ-ma-pa Revealed Treatises* *94-104*

In the thirty-first issue of this journal we introduced the "Anuyoga" and "Atiyoga" systems of rñiṅ-ma sect. Emanation of the revealed texts is the subject-matter of the present paper.

Allegedly, in circumstances where concealment of the sacred treatises seemed necessary in order to protect them from being profaned by the unwary mass they were put under guard by the *ḍākinīs* who kept them in secret places for such a time when they were to be brought to light by the prediction of the sages by such worthies who invoked the *ḍākinīs* (protecting deities) for permitting them to duly bring them to the world of human beings.

*The Buddhist Iconography : A Succinct Review* *105-120*

Buddhist literature is replete with allusions of various forms of the Buddhist icons with their multi-traits, conceptions and the modal processes. It is a matter of consideration as to when was the making of these images start, when Buddha himself denounced making of his image.

The evolution and development of Buddhist images is discussed here with authentic references of sources in Chinese and Tibetan archives.

*Outline of the Esoteric Literature* *121-126*

There is a very important work of Ācārya Bu-ston titled *A General and brief composition of key to Deliverance of the Revealed Text of Gem-door*. The text is being translated into Hindi; from the first part of the same

the initial translation is published in this issue q. v. "Classification of Tantra".

*A Commentary on the Dohākoṣa* 127-155

We give here a text of Paṇḍita Amṛtavajra's newly discovered commentary on Ācārya Kṛṣṇavajra-pāda's *Dohākoṣa.* It is presumably now published for the first time. There is a known *Mekhalā Ṭīkā* on Kṛṣṇapāda's verses. The original text is available in three recensions as of M. M. Haraprasad Shastri, P.C. Bagchi and Sri H. C. Bhayaṇī. All these tracts have been fully utilised in the present recension.

•

CENTRAL INSTITUTE OF HIGHER TIBETAN STUDIES
SARNATH, VARANASI

**List of books published under Rare Buddhist Texts Series**

1. Guhyādi-Aṣṭasiddhi Saṁgraha (1988) : Rs. 115 Hb, 90 Pb.
2. Jñānodaya Tantram (1988) : Rs. 15Pb.
3. Durlabha Grantha Paricaya Vol. I (1990) : Rs. 55Hb.
4. Durlabha Grantho kī Ādhāra Sāmagrī, Vol. I (1990) : Rs. 40Hb.
5. Bauddha Tantra Kosha, Vol. I (1990) : Rs. 45Hb, Rs. 40Pb.
6. Lupta Bauddha Vacana Saṁgrah, Vol. I (1990) : Rs. 40Hb, Rs. 30Pb.
7. Vasantatilaka of Kṛṣṇapāda with Auto-commentary. (1990) : Rs. 95Hb, Rs. 70Pb.
8. Ḍākinījālasaṁvararahasyam (1990) : Rs. 15Pb.
9. Kriṣṇayamāri Tantra with Ratnāvalīpañjikā of Kumaracandra (1992) : Rs. 150Hb, Rs. 100Pb.
10. Mahāmāyā Tantra with Guṇavatiṭīkā of Ratnākaraśānti (1992) : Rs. 70Hb, Rs. 50Pb.
11. Abhisamayamañjarī of Śubhākaragupta (1993) : Rs. 35Pb.
12. Vimalaprabhāṭīkā, Vol. IInd, Rs. 110Hb, Rs. 75Pb.
13. Vimalaprabhāṭīkā, Vol. IIIrd, Rs. 110Hb, Rs. 70Pb.
14. Bauddha Tantra Kosha, Vol. II (1997) : Rs. 100Hb, Rs. 85Pb.
15. Sūtratantrodbhava katipaya Dharaṇīmantra (1997) : Rs. 75Hb, Rs. 55Pb.
16. Adhyātmasāraśatakam (1997) : Rs. 40Pb.

17. Durlabha Bauddha Grantha Paricaya, Vol II (1997) : Rs. 150Hb, Rs. 125Pb.

18. Durlabha Grantho kī Ādhāra Sāmagrī, Vol. II (1997) Rs. 180Hb, Rs. 150Pb.

19. Bauddha Laghu Grantha Saṁgraha (1997) : Rs. 110Hb, Rs. 80Pb.

20. Siddhaikavīramahātantram (1998) : Rs. 90Hb, Rs. 60Pb.

21. Yoginīsañcāratantram with Ṭīkā (1998) : Rs. 170Hb, Rs. 140Pb.

22. Caryāmelapakapradīpam of Āryadeva (2000) Rs. 160Hb, Rs. 110Pb.

23. Tattvajñānasaṁsiddhi with Commentary : (2000) Rs. 135 Hb, Rs. 100Pb.

24. Kurukullākalpaḥ : (2001) Rs. 100Hb, Rs. 65Pb.

25. Lupta-Baudha-Vacana-Saṃgraha : Vol. II, (2001) Rs. 110Hb., Rs. 70Pb.

26. Sampādana Ke Siddhānta Aur Upādana : (Collection of Articles) (1990) Rs. 150Hb, Rs. 100Pb.

27. Bhāratīya Tantraśāstra (Proceedings of Workshop) (1995) : Rs. 380Hb, 220Pb.

28 ***Dhīḥ:*** Back issues of the journal are also available.

Complete set (Vol. I to XXXI): Total Rs. 2009.00.

